इवाऽस्माकमायुर्वर्धयन्सधस्थमासदत्सोऽस्माकं सखा वयं च तस्य सखायः स्याम ॥ १५ ॥

**भावार्थः**—ये धार्मिकाः शूरवीराश्शत्रून् विनाश्य सखीन् रक्षित्वा सर्वान्त्सज्जनानायुर्विजयाभ्यां वर्धयन्ति तैः सह सदैव मैत्री सर्वै रक्षणीया ॥ १ ॥

पदार्थः—हे मनुष्यो जो ( सोमः ) सुन्दर पथ्य और योग्य व्यवहार में प्रेरणा करता हुआ ( अभिमातीः ) शत्रुओं के सदृश रोगों को ( सहमानः ) सहन करता हुआसा ( अस्माकम् ) हम लोगों के ( आयुः ) जीवन को ( वर्धयन् ) बढ़ाता हुआ ( सधस्थम् ) साथ के स्थान को ( आ, असदत् ) स्थित हो वह हम लोगों का मित्र और हम लोग उस के मित्र होवें ॥ १५ ॥

भावार्थः—जो धार्मिक शूरवीर पुरुष शत्रुओं का नाश और मित्रों की रक्षा करके सब सज्जनों की जीवन और विजय से वृद्धि करते हैं उन के साथ सदैव मैत्री सब लोगों को रक्षा करनी चाहिये ॥ १५ ॥

अध्यापकोपदेशकविषयमाह ॥

अब अगले मन्त्र में अध्यापक और उपदेशक के विषय को कहते हैं ॥

**आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतू ॥ १६ ॥**

आ । नः । मित्रावरुणा । घृतैः । गव्यूतिम् । उक्षतम् । मध्वा । रजांसि । सुक्रतू इति सुऽक्रतू ॥ १६ ॥

**पदार्थः**—( आ ) ( नः ) अस्मभ्यम् ( मित्रावरुणा ) प्राणोदानवदध्यापकोपदेशकौ ( घृतैः ) उदकादिभिः ( गव्यूतिम् ) क्रोशद्वयम् ( उक्षतम् ) सिञ्चतम् ( मध्वा ) माधुर्येण ( रजांसि ) लोकान् ( सुक्रतू ) उत्तमप्रज्ञौ सत्कर्माणौ वा ॥ १६ ॥

अन्वयः—यौ सुक्रतू मित्रावरुणा घृतैर्गव्यूतिं रजांसि सिञ्चत इव मध्वा नोऽस्मानोक्षतं तौ वयं प्राणवत्प्रियौ मन्यामहे ॥ १६ ॥

भावार्थः—यावध्यापकोपदेशकोपदिष्टप्राणविद्यां विज्ञाय लोकलोकान्तरव्यवहारेण सर्वदेशेषु गमनागमनौ संसाधयतस्तौ जलवन्निर्मलान्तःकरणौ विज्ञातव्यौ ॥ १६ ॥

पदार्थः—जो ( सुक्रतू ) उत्तम बुद्धि वा श्रेष्ठ कर्म वाले ( मित्रावरुणा ) प्राण और उदान वायु के सदृश अध्यापक और उपदेशक ( घृतैः ) जल आदिकों से ( गव्यूतिम् ) दो कोस ( रजांसि ) लोकों को सिञ्चने वाले के सदृश ( मध्वा ) मधुरता से ( नः ) हम लोगों के लिये ( आ, उक्षतम् ) सींचने वाले हैं उन दोनों को हम लोग प्राणों के सदृश प्रिय मानते हैं ॥ १६ ॥

भावार्थः—जो पढ़ाने और उपदेश देने वाले से उपदेश की गई प्राण अर्थात् पवनसम्बन्धी विद्या को जानकर लोकलोकान्तर अर्थात् एकदेश से दूसरे देश के व्यवहार से सम्पूर्ण देशों में जाना आना सिद्ध करते हैं वे जल के सदृश शुद्ध अन्तःकरण वाले जानने योग्य हैं ॥ १६ ॥

पुनस्तमेव विषयमाह ॥

फिर उसही विषय को अगले मन्त्र में कहते हैं ॥

उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः ।
द्राघिष्ठाभिः शुचिव्रता ॥ १७ ॥

उरुऽशंसा । नमःऽवृधा । मह्ना । दक्षस्य । राजथः ।
द्राघिष्ठाभिः । शुचिऽव्रता ॥ १७ ॥

पदार्थः—( उरुशंसा ) बहुप्रस्तुती ( नमोवृधा ) नमसोऽन्नादेर्वर्धकौ ( मह्ना ) महत्त्वेन ( दक्षस्य ) बलस्य

(राजथः) (द्राघिष्ठाभिः) अत्यन्तं दीर्घाभिः पुरुषार्थयुक्ताभिः क्रियाभिः ( शुचिव्रता ) पवित्रकर्माणौ ॥ १७ ॥

अन्वयः—हे शुचिव्रतोरुशंसा नमोवृधा मित्रावरुणा यतो युवां प्राणोदानाविव दक्षस्य मह्ना द्राघिष्ठाभी राजथस्तस्मात्सत्कर्त्तव्यौ भवथः ॥ १७ ॥

भावार्थः—हे मनुष्या ये पवित्रोपचिता यशस्विनो बलैश्वर्य्यान्नादीनां वृध्या महतीभिः सत्क्रियाभिर्लोकेषु प्रकाशन्ते तानेव सेवध्वं सत्कुरुत ॥ १७ ॥

पदार्थः—हे ( शुचिव्रता ) उत्तम कर्म करने वाले ( उरुशंसा ) बहुत स्तुतियों से युक्त ( नमोवृधा ) अन्न आदि के बढ़ाने वाले अध्यापक और उपदेशक लोगो जिससे कि आप दोनों प्राण और उदान वायु के सदृश ( दक्षस्य ) बल के ( मह्ना ) महत्त्व से ( द्राघिष्ठाभिः ) बहुत बड़ी और पुरुषार्थ से युक्त क्रियाओं से ( राजथः ) प्रकाशित होते हैं इस कारण सत्कार करने योग्य हैं ॥ १७ ॥

भावार्थः—हे मनुष्यो जो पवित्रता से युक्त यशस्वीजन बल ऐश्वर्य्य और अन्न आदि की वृद्धि और बड़े श्रेष्ठ कर्म्मों से लोकों में प्रकाशित होते हैं उन की ही सेवा और सत्कार करो ॥ १७ ॥

पुनस्तमेव विषयमाह ॥

फिर उसी विषय को अगले मंत्र में कहते हैं ॥

गृणाना जमदग्निना योनावृतस्य सीदतम् ।
पातं सोममृतावृधा ॥ १८ ॥ ११ ॥ ५ ॥ ३ ॥

गृणाना । जमत्ऽअग्निना । योनौ । ऋतस्य । सीदतम् । पातम् । सोमम् । ऋतऽवृधा ॥ १८ ॥ ११ ॥ ५ ॥ ३ ॥

**पदार्थः**–( गृणाना ) स्तुवन्तौ ( जमदग्निना ) चक्षुषा प्रत्यक्षेण ( योनौ ) गृहे ( ऋतस्य ) सत्याचारस्य ( सीदतम् ) वसतम् ( पातम् ) रक्षतम् ( सोमम् ) ऐश्वर्यम् ( ऋतावृधा ) सत्यवर्द्धकौ ॥ १८ ॥

**अन्वयः**--हे ऋतावृधा गृणाना मित्रावरुणौ युवां जमदग्निना ऋतस्य योनौ सततं सीदतं सोमं पातम् ॥ १८ ॥

**भावार्थः**–त एवाऽध्यापकोपदेशका भवितुमर्हन्ति ये प्रत्यक्षादिभिः प्रमाणैः पृथिवीमारभ्य परमेश्वरपर्यन्तान् पदार्थान्त्साक्षात्कृत्वा सत्यविद्याचरणवृद्धिप्रिया धर्म्येण पथा गच्छेयुस्ते सत्कर्त्तुमर्हाः स्युरिति ॥ १८ ॥

अत्र मित्राऽध्यापकाऽध्येतृश्रोत्रुपदेशकपरमात्मविद्वत्प्राणोदानादिगुणवर्णनादेतदर्थस्य पूर्वसूक्तार्थेन सह सङ्गतिरस्तीति वेद्यम् ॥

इति तृतीये मण्डले द्विषष्टितमं सूक्तं पञ्चमोऽनुवाकस्तृतीयाष्टक एकादशो वर्गस्तृतीयञ्च मण्डलं समाप्तम् ॥

पदार्थः–( ऋतवृधा ) सत्य के बढ़ाने वाले ( गृणाना ) स्तुति करते हुए अध्यापक और उपदेशक आप दोनों ( जमदग्निना) नेत्र अर्थात् प्रत्यक्ष से ( ऋतस्य ) सत्य आचरण के ( योनौ ) स्थान में निरन्तर ( सीदतम् ) वसो और ( सोमम् ) ऐश्वर्य की ( पातम् ) रक्षा करो ॥ १८ ॥

भावार्थः-वे ही अध्यापक और उपदेशक होने के योग्य हैं कि जो प्रत्यक्ष आदि प्रमाणों से पृथिवी को लेकर परमेश्वरपर्य्यन्त पदार्थों का साक्षात्कार करके सत्यविद्या के आचरण की वृद्धि जिनको प्रिय, जो धर्मयुक्त मार्ग में जावें वे सत्कार करने के योग्य होवें ॥ १८ ॥

इस सूक्त में मित्र अध्यापक पढ़ने वाले श्रोता उपदेशक परमात्मा विद्वान् प्राण और उदान आदि के गुण वर्णन करने से इस सूक्त के अर्थ की इससे पूर्वसूक्त के अर्थ के साथ सङ्गति है ऐसा जानना चाहिये ॥

यह तीसरे मण्डल में बासठवां सूक्त पांचवां अनुवाक तीसरे अष्टक में ग्यारहवां वर्ग और तृतीय मण्डल समाप्त हुआ ॥